॥ सूर्योपनिषत् सूर्याथर्वशीर्षम् च ॥

अथर्ववेदीय सामान्योपनिषत् ।

सूदितस्वातिरिक्तारिसूरिनन्दात्मभावितम् ।
सूर्यनारायणाकारं नौमि चित्सूर्यवैभवम् ॥

ॐ भद्रं कर्णेभिः श्रुणुयाम देवाः । भद्रं
पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ।
स्वस्ति न इन्द्रो वृद्धश्रवाः ।  स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ अथ सूर्याथर्वाङ्गिरसं व्याख्यास्यामः ।
ब्रह्मा ऋषिः । गायत्री छन्दः । आदित्यो देवता ।
हंसः सोऽहमग्निनारायणयुक्तं बीजम् । हृल्लेखा शक्तिः ।
वियदादिसर्गसंयुक्तं कीलकम् ।
चतुर्विधपुरुषार्थसिद्ध्यर्थे विनियोगः ।
षट्स्वरारूढेन बीजेन षडङ्गं रक्ताम्बुजसंस्थितम् ।
सप्ताश्वरथिनं हिरण्यवर्णं चतुर्भुजं
पद्मद्वयाभयवरदहस्तं कालचक्रप्रणेतारं
श्रीसूर्यनारायणं य एवं वेद स वै ब्राह्मणः ।
ॐ भूर्भुवःसुवः । ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य
धीमहि । धियो यो नः प्रचोदयात् ।
सूर्य आत्मा जगतस्तस्थुषश्च । सूर्याद्वै खल्विमानि
भूतानि जायन्ते ।
सूर्याद्यज्ञः पर्जन्योऽन्नमात्मा नमस्त आदित्य ।
त्वमेव प्रत्यक्षं कर्मकर्तासि । त्वमेव प्रत्यक्षं ब्रह्मासि ।
त्वमेव प्रत्यक्षं विष्णुरसि ।
त्वमेव प्रत्यक्षं रुद्रोऽसि । त्वमेव प्रत्यक्षमृगसि ।
त्वमेव प्रत्यक्षं यजुरसि ।
त्वमेव प्रत्यक्षं सामासि । त्वमेव प्रत्यक्षमथर्वासि ।
त्वमेव सर्वं छन्दोऽसि ।
आदित्याद्वायुर्जायते । आदित्याद्भूमिर्जायते । आदित्यादापो
जायन्ते । आदित्याज्ज्योतिर्जायते ।
आदित्याद्व्योम दिशो जायन्ते । आदित्याद्देवा जायन्ते ।

आदित्याद्वेदा जायन्ते ।
आदित्यो वा एष एतन्मण्डलं तपति । असावादित्यो ब्रह्म ।
आदित्योऽन्तःकरणमनोबुद्धिचित्ताहङ्काराः । आदित्यो वै
व्यानः समानोदानोऽपानः प्राणः ।
आदित्यो वै श्रोत्रत्वक्चक्षूरसनघ्राणाः । आदित्यो वै
वाक्पाणिपादपायूपस्थाः ।
आदित्यो वै शब्दस्पर्शरूपरसगन्धाः । आदित्यो वै
वचनादानागमनविसर्गानन्दाः ।
आनन्दमयो ज्ञानमयो विज्ञानानमय आदित्यः । नमो मित्राय
भानवे मृत्योर्मा पाहि ।
भ्राजिष्णवे विश्वहेतवे नमः । सूर्याद्भवन्ति भूतानि
सूर्येण पालितानि तु ।
सूर्ये लयं प्राप्नुवन्ति यः सूर्यः सोऽहमेव च । चक्षुर्नो
देवः सविता चक्षुर्न उत पर्वतः ।
चक्षुर्धाता दधातु नः । आदित्याय विद्महे सहस्रकिरणाय
धीमहि । तन्नः सूर्यः प्रचोदयात् ।
सविता पश्चात्तात्सविता
पुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ।
सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ।
ॐइत्येकाक्षरं ब्रह्म । घृणिरिति द्वे अक्षरे । सूर्य
इत्यक्षरद्वयम् । आदित्य इति त्रीण्यक्षराणि ।
एतस्यैव सूर्यस्याष्टाक्षरो मनुः । यः सदाहरहर्जपति स
वै ब्राह्मणो भवति स वै ब्राह्मणो भवति ।
सूर्याभिमुखो जप्त्वा महाव्याधिभयात्प्रमुच्यते ।
अलक्ष्मीर्नश्यति । अभक्ष्यभक्षणात्पूतो भवति ।
अगम्यागमनात्पूतो भवति । पतितसम्भाषणात्पूतो भवति ।
असत्सम्भाषणात्पूतो भवति ।
मध्याह्ने सूराभिमुखः पठेत् ।
सद्योत्पन्नपञ्चमहापातकात्प्रमुच्यते ।
सैषां सावित्रीं विद्यां न किञ्चिदपि न
कस्मैचित्प्रशंसयेत् ।
य एतां महाभागः प्रातः पठति स भाग्यवाञ्जायते ।
पशून्विन्दति । वेदार्थं लभते ।
त्रिकालमेतज्जप्त्वा क्रतुशतफलमवाप्नोति । यो हस्तादित्ये
जपति स महामृत्युं तरति य एवं वेद ॥

इत्युपनिषत् ॥

हरिः ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इति सूर्योपनिषत्समाप्ता ॥